ह्मणत्त्वा। इत्यादिविशेषनाममात्रमेवनतुब्राह्मणत्व हानिः किंचयथातत्रापिउत्तमांगहीनेकबंधत्वमेवन तुशरीरत्वंतथात्रापिसाविञ्युपदेशाभावादिपातित्यसं पादकदोषेकृतेव्रात्यःपतितइत्येवस्यात् नब्राह्मणइति यथोक्तमाश्वलायनचरणेन। अतऊर्ध्वंपतितसावित्री काभवंतिनैनानुपनयेन्नाध्यापयेन्नैभिर्व्यवहरेयुरिति। एवंसमासेनसर्वविषयोत्तरस्यदत्तप्रायत्वेऽपिभवत्कृ तपृथक्पृथङ्निराकरणस्याप्युत्तरंदीयतेशृणुतावत्॥

मूलं। जीवस्तावद्ब्राह्मणोनभवतीत्यादि॥ अस्योत्तरं॥ अत्रपृथग्विचार्यमाणेजीवोब्राह्मणोनभवतिशूद्रोपि नभवति। उक्तंचाध्यात्मरामायणेरामचंद्रेण॥

नस्त्रीपुमान्नषंडोवाजीवःसर्वगतोऽ
व्ययइति॥

एवंवस्तुतःकेवलस्यपुंस्त्वस्त्रीत्ववर्णत्वाद्यभावेपिसं योगबलेनतुघटते। यथातत्रैव॥

यथाविशुद्धस्फटिकोऽलक्तकादिस
मीपगः॥ तत्तद्वर्णयुगाभातीति॥

यथापुरुषादिशरीराविष्टस्तत्तद्योग्यव्यवहारंनिर्वह न्तज्जनितसुखदुःखादिकमनुभवति। यथागीतायां॥

कार्यकारणकर्तृत्वेहेतुःप्रकृतिरुच्यते॥

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यतइति॥

तथाब्राह्मणादिशरीराविष्टस्तत्तद्वर्णाश्रमविहितकर्मकुर्वन् तस्य सांगव्यंगत्वेन तज्जनितसुकृतदुष्कृतफलं भुंक्ते। तदर्थमुत्तमाधमशरीरधारणमप्यविरुद्धमेव॥ यथा गीतायां॥

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान्॥ कारणं गुणसंगोस्य सदसद्योनिजन्मसु॥

तथाच भागवते ३ स्कंधे ३० अध्याये॥

अधस्तान्नरलोकस्य यावतीर्यातनादयः॥ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिरिति॥

नरलोकस्य नरदेहस्य अधस्तात् तिर्यक्शरीर इत्यर्थः। तस्मात् भारतोक्तव्याधमृगहंसचक्रवाकादीनां ब्राह्मणत्वं देहांतरेनाश्चर्यकारकं। वेदमनुवचनविरोधविवरणं अग्रेभविष्यति। अनुभवकालेनतत्वमपि सिध्यति। अतो यावद्ब्राह्मणशरीरमविष्टस्तावज्जीवोपि ब्राह्मण एव अहं ब्राह्मण इति दृढप्रत्ययदर्शनात्॥ न तु सति कुडये चित्रमिति न्यायात् ब्राह्मणशरी

ह्मणत्वा। इत्यादिविशेषनाममात्रमेवनतुब्राह्मणत्व हानिः किंच यथातत्रापिउत्तमांगहीने कबंधत्वमेवन तु शरीरत्वं तथात्रापिसाविञ्युपदेशाभावादिपातित्यसं पादकदोषेकृतेव्रात्यः पतितइत्येवस्यात् न ब्राह्मणइति यथोक्तमाश्वलायनचरणेन। अतऊर्ध्वं पतितसावित्री काभवंति नैनानुपनयेन्नाध्यापयेन्नैभिर्व्यवहरेयुरिति। एवंसमासेनसर्वविषयोत्तरस्यदत्तप्रायत्वेऽपिभवत्कृ तपृथक्पृथक्शिराकरणस्याप्युत्तरंदीयतेश्रृणुतावत्॥ मूलं। जीवस्तावद्ब्राह्मणोनभवतीत्यादि॥ अस्योत्तरं॥ अत्रपृथग्विचार्यमाणेजीवो ब्राह्मणोनभवतिशूद्रोपि नभवति। उक्तंचाध्यात्मरामायणे रामचंद्रेण॥

नस्त्रीपुमान्नषंडोवाजीवः सर्वगतोऽ
व्ययइति॥

एवंवस्तुतः केवलस्यपुंस्त्वस्त्रीत्ववर्णत्वाद्यभावेपिसं योगबलेनतुघटते। यथातत्रैव॥

यथाविशुद्धस्फटिकोऽलक्तकादिस
मीपगः॥ तत्तद्वर्णयुगाभातीति॥

यथापुरुषादिशरीराविष्टस्तत्तद्योग्यव्यवहारंनिर्वह न् तज्जनितसुखदुःखादिकमनुभवति। यथागीतायां॥

कार्यकारणकर्तृत्वेहेतुःप्रकृतिरुच्यते॥

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्य
तइति ॥

तथा ब्राह्मणादिशरीराविष्टस्तत्तद्वर्णाश्रमविहितकर्मकुर्वन् तस्य सांगत्र्यंगत्वेन तज्जनितसुकृतदुष्कृतफलंभुंक्ते। तदर्थमुत्तमाधमशरीरधारणमप्यविरुद्धमेव ॥ यथा गीतायां ॥

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजा
न्गुणान् ॥ कारणं गुणसंगोस्य सदस
द्योनिजन्मसु ॥

तथाच भागवते ३ स्कंधे ३० अध्याये ॥

अधस्तान्नरलोकस्य यावतीर्यातना
दयः ॥ क्रमशः समनुक्रम्य पुनरत्राव्र
जेच्छुचिरिति ॥

नरलोकस्य नरदेहस्य अधस्तात् तिर्यक्शरीर इत्यर्थः। तस्मात् भारतोक्तव्याधमृगहंसचक्रवाकादीनां ब्राह्मणत्वं देहांतरे नाश्चर्यकारकं। वेदमनुवचनविरोधविवरणं अग्रेभविष्यति। अनुभवकालेतत्वमपिसिध्यति। अतो यावद्ब्राह्मणशरीरमाविष्टस्तावज्जीवोपि ब्राह्मण एव अहं ब्राह्मण इति दृढप्रत्ययदर्शनात् ॥ नतु सति कुड्ये चित्रमिति न्यायात् ब्राह्मणशरी

रस्यसत्वेनदाविष्टजीवोपिब्राह्मणोभवेत् तदेवनास्ति कुतः। अन्नमयादन्नमयमितिपांचभौतिकसाम्यात्। यद्युच्यते अवयवानामप्यवयव्यवच्छेदकावच्छिन्न त्वात् अंगुष्ठमात्रेऽपिशरीरत्ववदस्यैवशरीरेब्राह्म णत्वमिति। तर्हिपावकोपिब्राह्मणहास्यात् ब्रह्मह त्याचबंधूनांशरीरदहनाद्भयेदितिचेन्न। शरीरदह नस्यांत्येष्ट्यादिविधिप्राप्तत्वात्। अदहनेऽपिनाशस्या वश्यंभावित्वात्। अन्यथानाशे तुपूतिगंधकृमिपतना दिबीभत्सत्वापत्तेः तन्निवारणोपकारकत्वात्ज्वल नतापजनितपीडाभोक्तुर्जीवस्याप्यभावाच्चतत्कर्म दोषायनभवति। नचजीवाभावादेवब्राह्मणत्वंनास्ती तिवाच्यं। अंत्येष्ट्यादिश्रुत्युक्तकर्माभावापत्तेः। अत एवप्रागुक्तंकस्यचिदवयवस्यविकलत्वेविशेषनाम मात्राधिक्यमिति। अतोत्रापिजीवाभावान्मृतब्राह्म णशरीरमिति॥ यदुक्तंब्राह्मणशरीरविनाशाच्चयज नादिषट्कर्मणांब्राह्मणशरीरजनितानांफलस्यनाशः स्यादिति। एतच्चभवन्मतं। यथा॥

भस्मीभूतस्यदेहस्यपुनरागमनंकुतः॥
तस्मात्सर्वप्रयत्नेनऋणंकृत्वाघृतंपि
बेदिति॥

नन्वेतदभिमतं लोकांतरे तत्फलानुभवस्य शास्त्रप्रसि
द्धत्वात्। यथाह भगवान्।

त्रैविद्यामां सोमपाः पूतपापा यज्ञैरि
ष्ट्वा स्वर्गतिं प्रार्थयंते॥ ते पुण्यमासा
द्य सुरेंद्रलोकमश्नंति दिव्यान् दिविदे
वभोगानिति॥

अन्यच्च। यदि शरीरं ब्राह्मणः स्यात्तर्हि ब्राह्मण शरी
रनिष्पंदजाताश्च क्षत्रियवैश्यशूद्रा अपि ब्राह्मणाः
स्युरिति॥ अत्र ब्राह्मणदंपत्योः सुतस्यैव ब्राह्मणजा
तेर्गृहीतत्वात्ते ब्राह्मणा भवितुं नार्हंति। अनेनैव
विदुरा इति लोके प्रसिध्धा ब्राह्मणजनिता दासीपुत्रा
स्तेषामपि निवृत्तिः॥ इति शरीरमपि ब्राह्मणो न भवतीत्य
स्योत्तरं॥ एवं चेत्तर्हि ब्राह्मणाभावः प्राप्नोति। इदानीं
तनेषु ब्राह्मणेषु पितरि संदेहादिति चेत्। भवान् प्राज्ञः
अतोत्र भवत एव पितरि संदेहो नान्येषां। एवं सुधा सर्वत्र
संदिहानस्य सुखोदर्कं न स्यात्। यथा।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्य
ति॥ नायं लोकोस्ति न परो न सुखं संशया
त्मन इति॥

अहो गोत्र ब्राह्मणमारभ्य ब्राह्मणीनां शूद्रपर्यंतमभि

गमनदर्शनात्संशयाभावएवेतिचेत् भवान्भल्लाक्षःपुरोभागीतिभवानेवैतत्सदापश्यतिनान्ये। किंच। एतादृशकर्मणःकुत्राप्यभावएवेतिनास्माभिरुच्यते। यत्रसाक्षात्प्रपश्यंतितत्रसद्यएवबहिष्कुर्वंतितत्रापि। रजसाशुध्यतेनारीतिवचनात्गर्भधारणात्प्रागेवोत्तमाधमतारतम्येननिवृत्तेरवसरःपरतस्तुनास्त्येवपुनरावृत्तिः। सगोत्रब्राह्मणाद्गर्भधारणेऽपितत्रजातस्यकुंडत्वंनतुब्राह्मणत्वं। अमृतेजारजःकुंडइतिकोशोक्तेः। तदाअन्यत्किंवाच्यं। अथवृथाकथमुच्यतेब्राह्मणाभावःप्राप्नोतीति॥ भवादृशादुष्टप्रवादस्याप्तवाक्यत्वाभावाचेनव्यवहारनिश्चयोभवितुंनार्हति। कुतः॥

अपक्वधाचामधमाधमानांनसूक्तिगं
धोपिगिरांप्रबंधे॥ पिण्याकपण्यव्यव
हारभूमौकुरंगनाभेःकुतएववार्ता॥

इत्यस्मात्॥ ननुयदासाक्षात्प्रपश्यंतितदाबहिष्कुर्वंतुपरंतुतत्पूर्वदोषस्यब्राह्मणत्वएवविद्यमानत्वात्कथंब्राह्मणत्वस्यशुद्धत्वमितिचेत् मैवंवोचः। एतद्दोषस्याज्ञातस्थितिःपरंतुभवच्छरीरउदरकोष्ठकेमलोस्तीतिभवताज्ञातमेवतथाऽपिशरीरंनत्यजसिनवाअपवित्रंमन्यसेतस्मिन्नेवबहिःपतितेत्वतीवासह्यं

मन्यसे दूरत एव त्वजसि त्वैवमेव तन्नापीतिजानीहि।

सर्वारंभाहि दोषेण धूमेनाग्निरिवावृता

इत्युक्तेः॥

ननु ब्राह्मण दंपत्योः सुतस्यैव ब्राह्मणजातेर्गृहीतत्वा दित्युक्तमेतदनुपपन्नं व्यभिचार दर्शनात्। उक्तंहि स्मृतौ। हस्तिन्यामचलोजात इत्यारभ्यजातिस्तावद्ब्राह्मणानभवतीत्यंतस्यांतरं॥ कपिलो देवहूत्यांजात इति पुराणे अत्र कपिलाजात इति लिखितं। अगस्त्यः कुंभसंभव इति कोशे अत्रागस्तिपुष्पादिति। विश्वामित्रो गाधिराजसुत इति पुराणे अत्र चंडालीसुत इति। किंच। एकत्र कौशिकः कुशासंभव इति पुनः कौशिकं नैव शूद्रिकेति च। कौशिकस्तु विश्वामित्र एव। महेंद्र गुग्गुलूलूकव्यालग्राहिषु कौशिक इति नानार्थ कोशे वर्त्तते परंतु ब्राह्मणेष्वेनेषां प्रयोजनाभाव एव। अत एवंविनिगमनाविरहात्कतमं सत्यं ज्ञेयं। रेणुकाः जनपद्ग्राममित्यत्रोक्तं रेणुकातु जमदग्नेर्भार्यैवात्र किमाश्चर्यमापतितं। कैवर्त्तिन्यजनद्व्यासमिति सत्यवत्या दाशराजपालितत्वात् कैवर्त्तिनीति नाम निश्चितं कैवर्त्तदाशधीवराविति कोशोक्तेः। वस्तुतस्तु वसुराजामोघवीर्यान्मत्स्युदरे जाता ऽतो मत्स्यगंधेत्यपि

नाम सैव सत्यवत्यपि। अतएषाकावास्मृतिरित्येतन्मूलं मृग्यं। अस्तु नाम स्मृतिमूलविचारः व्यासवसिष्ठद्रोणाचार्यादयो ज्ञाताः प्रसिद्धा एव अत्रैकस्याप्युक्त्यनुसारेण वास्तवत्वे व्यभिचारो दुर्वार एवेत्यत उच्यते॥ तेषां तेजोविशेषेण प्रत्यवायो न विद्यते। अतएव ऋषीणां कुलं नदीनां मूलं न विचारयेदिति लौकिकी गाथाऽपि प्रसिद्धा। तथाच व्यासजन्म महाभारते आदिपर्वणि वंशावतरणे विस्तरतो द्रष्टव्यं। अत्र किंचिल्लिख्यते॥

इतिसत्यवती हृष्टा लब्ध्वा वरमनुत्तमं॥
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा॥
जज्ञे च यमुनाद्वीपे पाराशर्यः सवीर्यवान्॥ समातरमनुज्ञाप्य तपस्येव मनो दधे॥ स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत्॥ एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरादित्यादि॥

सांप्रतमप्येवंविधो जन्यजनकौ स्तः श्रेयोग्यो भवतः॥ येषाममोघवीर्यं अचेतनकुशघटादावपि न नश्यति। अतएव।

महात्मनां वचः सत्यं तथैवाचरितं क्वचित्॥ तेषां यत्स्ववचोयुक्तं बुद्धिमांस्त

त्स माचरेदिति।

आधुनिकानां वीर्यं तु क्षेत्रेऽपि नियतं न फलत्यल्पवीर्यत्वात्। अत एव ब्राह्मणदंपत्योः सुत इति नियमः कृतः। पूर्वं सामर्थ्यातिशयादेव द्वादशविधपुत्रग्रहणमासीत्। तदानीं क्षेत्रजापविध्धादीनां ब्राह्मणवीर्यजनितान्जनितत्वज्ञानमासीत्तेन वर्णसंकरो नाभवत्। संप्रति भवेदिति भीत्यैवौरसकृत्रिमावेव गृहीतौ। अत ऋषीणां जन्मप्रदर्शनेनास्य नियमस्य बाधो न भवेत्। कुतः। यथा सामान्यतः शास्त्रे चिरंटीनां सर्वत्र केशकृंतननिषेधेऽपि प्रयागे क्षेत्रबलात् विशेषशास्त्रेण विधिर्वर्तते स तु तस्मिन्नेव क्षेत्रे युक्तः तमन्यत्र प्रवर्तयितुं कोपि न शक्नोति। अनेन सर्वत्र निषेधशास्त्रस्य बाधोपि नास्ति। यथा च पुरुषोत्तमक्षेत्रे नाम जगन्नाथक्षेत्रे शूद्रस्पृष्टस्यापि प्रसादान्नस्य भक्षणविधिर्वर्त्तते। एवमेव सर्वत्र कर्त्तुं न शक्यते विशेषविधानाभावात् दोषश्रवणाच्च॥ यथा॥

> शूद्रीहस्तेन यो भुंक्ते मासमेकं निरंतरं॥ जीवमानो भवेच्छूद्रो मृतः श्वान श्च जायते॥

इति मनुवचने विद्यमानेऽपि भगवदाज्ञया तत्र विधि

रस्ति। फलश्रवणमपि। यथा।

निवेदितस्यान्नरसासखायनीचाहृत
स्यापिकिलोदनादेः॥ भुक्ताशनंहंत
भयार्जितानांमहाहसांनाशनमाम
नंतीति॥

तथैवात्रापीति ध्येयं॥ अहोमाभूदनेनहेतुनाऽति
व्याप्तिव्यभिचारः परंतु अव्याप्तिव्यभिचारस्तुदृश्य
ते। कथमितिचेत्। ब्राह्मणदंपतिसुतेऽपिप्रथमंब्रा
ह्मणत्वंनास्तिजन्मतः शूद्रत्वात्॥ यथाहुः॥

जन्मनाजायतेशूद्रोव्रतबंधाद्विजो
भवेत्॥ वेदाभ्यासीभवेद्विप्रो ब्रह्मज्ञो
ब्राह्मणोभवेत्॥

इतिवचनादितिचेदुच्यते। अत्रेदंवचनंज्ञानवद्ब्रा
ह्मणस्तावकंनतुशूद्रत्वप्रापकंकौमारेकर्मकरणश
क्तिर्नास्तीनितन्निषेधात्ब्राह्मणत्वव्यंजककर्मकर
णाभावेनशूद्रकल्पइत्येवाशयोनतुसामान्यतः शूद्र
इति अतोऽव्यंजितब्राह्मणत्वव्याप्यशूद्रत्वं। यथा
पितृधनेपुत्राणांजन्मतएवस्वत्वोत्पत्तावपिसति
पितरिविभागात्प्राक् यथेच्छव्ययेस्वातंत्र्याभावात्
अव्यंजितमेवस्वत्वंतथाऽत्रापिसंस्कारावधीतिज्ञे

यं। अन्यथाशूद्राविशेषेव्रतबंधाद्विजोभवेदित्युक्ते शूद्रोपिव्रतबंधात्द्विजोभवेत्एतत्कदाऽपिनघटते। अस्तुनामशूद्रत्वेविशेषः व्रतबंधसाम्यात्क्षत्रियवैश्यसाम्यंतुघटेतेतिचेन्न। तत्रापिब्राह्मणत्वव्याप्यद्विजत्वमेवान्यथाव्रतबंधविधेरविशेषः स्यात्तथानास्तिब्राह्मणक्षत्रियवैश्यानांक्रमात्पलाशपिप्पलोदुंबरदंडधारणंभवत्पूर्वभवन्मध्यभवदंत्याभिर्भिक्षायाञ्चा अभिवादनेशर्मवर्मगुप्तोच्चारणाद्यनेकविधविधिविशेषदर्शनात्। एवंवेदाभ्यासेऽप्यंत्ययोरध्यापनाधिकाराभावाद्विप्रत्वंनास्ति। ब्रह्मज्ञइत्यत्रव्याप्यव्यापकसाम्येनसर्वात्मनाब्राह्मणत्वमित्यतिश्रेष्ठ्यंप्रतिपादितं। परंतुजन्मतएवब्राह्मणत्वंवर्त्तते॥ एवंमानववचनोक्तशूद्रत्वमपि। यथाहमनुः॥

सद्यः पततिमांसेनलाक्षयालवणेन
च॥ त्र्यहाच्छूद्रश्चभवतिब्राह्मणः क्षी
रविक्रयीति॥

इदंवचनंविकर्मब्राह्मणनिंदकंनतुशूद्रत्वप्रापकं। अत्रभवतैवोक्तंकिंखलुदुष्टोप्यश्वः सूकरोभवेदिति। अतोयथालौकिकेआजानेयाश्वस्यकेनचित्संगत्यादिदोषेणपंचधारागत्यादिविकलत्वे अश्वोगर्दभोजात

इत्युक्तिवत्। तत्र वस्तुतस्तु गर्दभो न जातः परंतु गुणहीनत्वात्साम्यमात्रं। तथाऽपि धर्मभ्रष्टत्वान्शूद्रसाम्यमात्रमेव न तु शूद्रत्वं। अन्यथा प्रायश्चित्तादिनिष्कृतिर्न स्यात्॥ एवमेव सूर्यसोमादीनां पशुत्व कथन श्रुतेरभिप्रायोपि पशुत्वप्रतिपादको न भवति यथा सिंहो देवदत्त इत्यत्र देवदत्तः सटापुच्छ चतुष्पाद सहित इत्यभिप्रायो नास्ति किंतु सिंहतुल्य पराक्रमीति। तथा देवा अपि पुच्छ विषाण सहिता इति न। ज्ञानेन हीनाः पशुभिः समाना इत्युक्तेः आदौ विशेष ज्ञानहीना आसन् ततस्तपसा भगवदाराधनेन प्राप्तज्ञाना बहुज्ञा आसन्निति। अन्येषां किं वाच्यं सृष्टिकर्तुर्ब्रह्मणोप्येवमेव। ब्रह्मणो वृत्तं भागवते २ स्कंधे ९ अध्याये द्रष्टव्यं। सारांशस्तु भगवानेक एव सर्वज्ञः स्वतंत्रः अन्ये सर्वेऽपि परिमितज्ञा अस्वतंत्राश्च तद्भयेन तदाज्ञया चरंतीति श्रुत्यर्थो भागवते ३ स्कंधे २९ अध्याये॥

यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात्॥ यद्भयाद्वर्षते देवो भगणो भाति यद्भयादिति॥

एवं सूचनार्थः श्रुतेरभिप्रायः। अतो भागवते॥

परोक्षवादोवेदोऽयंबालानामनुशा
सनं॥ कर्ममोक्षायकर्माणि विधत्ते
ह्यगदंयथेति॥

अत्रेदंतत्वमवगंतव्यं। यत्रस्वल्पापराधस्यात्यनिष्ट
फलंश्रूयतेतत्रतत्कर्मानिवृत्त्यर्थंभयप्रदर्शनमेव। य
थाऽल्पसुकृतस्यमहत्फलश्रवणंरोचनार्थाफलश्रु
तिरिति। नहिकुत्राप्युर्वारुकचोरंशूलमारोपयंति।
नचदरिद्रतः कोटिधनप्राप्तिर्भवेत्॥ अतोयदुक्तंमा
नवेधर्मे॥

अधीत्यचतुरोवेदान्सांगोपांगेनत
त्वतः॥ शूद्रात्प्रतिग्रहग्राहीब्राह्मणो
जायतेखरः॥ खरोद्वादशजन्मानिष
ष्टिजन्मानिसूकरः॥ श्वानःसप्ततिज
न्मानिइत्येवंमनुरब्रवीदिति॥

एतच्छूद्रप्रतिग्रहनिवर्तकाभिप्रायकमेवनतुखर
त्वादिप्रापकं। अन्यथायथोक्तार्थस्यैववास्तवपक्षे
फलश्रुतेरपिवास्तवंस्यात्। तथासतिएतन्निष्कृति
रपिसुलभैव। यथाऽध्यात्मरामायणआरंभाध्याये॥

दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवं॥
पापंसकृत्कीर्तनेनरामगीताविनाशा

येदिति॥

एवंचसंध्यावंदनभाष्ये आचमनविधौ॥

गोकर्णाकृतिहस्तेनमाषमग्नंजलंपि
बेत्॥ तन्न्यूनमधिकंवाऽपिसुरापान
समंभवेदिति॥

अत्रजलन्यूनाधिक्यमात्रेणमहापातकांतर्गतसु
रापानप्रापणंआस्तिक्यबुध्दिनाकर्मकर्तव्यंनोचेदेव
वमितिभयप्रदर्शनार्थमेव। तत्वंचुवैदिकनिघंटौसु
रेतिजलनामापिवर्त्तते अतोन्यूनाधिकत्वेजलपान
समंभवेत् नत्वाचमनविधिसिध्याभायत्वंस्या
दिति। अत्राप्येतस्यवस्तुत्वेएतादृशफलश्रुतेरपिवस्तु
त्वंस्यात्॥ यथाहरितालिकाव्रतकथायां॥

एवंविधिंयाकुरुतेचनारीभर्त्रासमं
सारमतेसुखेन॥ विनाशकालेमम
तुल्यरूपंसायुज्यमुक्तिंलभतेसुखेन॥
अश्वमेधसहस्राणिवाजपेयशतानि
च॥ कथाश्रवणमात्रेणतत्पुण्यंलभ
तेनरइति॥

अत्रज्ञानंविनानकैवल्यमितिज्ञानैकसाध्यस्यमोक्ष
स्यअर्थासमर्थोविद्वान्जातपुत्रः कृष्णकेशीत्येवंवि

धाधिकारिणाद्रव्यश्रमसाध्यस्य यज्ञफलस्यच प्राप्तिः व्रतानुष्ठानमात्रेण कथाश्रवणेन्च स्त्रियाउक्ता। एतद्वस्तुत्वेसर्वशास्त्रविरोधः स्यात्। अतोरोचनार्थमेव। तन्त्र भयप्रदर्शनार्थमेवेति सिद्धं॥ एवमस्तीति दुष्कर्मण्यनिष्टफलंसत्कर्मणीष्टफलंसुतरांनास्तीतिनास्माभिरुच्यते। किंतु। तत्तत्कर्मयोग्यफलाफलकल्पनमेवोचितमिति। अतउक्तमारंभे

धर्मस्यतत्वं निहितं गुहायामिति॥

यत्रत्वपराधानुरूपंदुष्टफलश्रवणंप्रायश्चित्तादिकंचतत्रवास्तवमेवज्ञेयं। यथा॥ गुरुतल्पगामीसवृषणंशिश्नंपरीवास्यांजलावादाय दक्षिणां दिशामनावृत्तिं व्रजेदिति॥ किंच॥

शूद्रीपरिवृतोविप्रः शूद्रीच्चगृहमेधिनी॥ वर्जितः पितृदेवेनरौरवंसोधिगच्छतीति॥

एवमादिस्थलेयथोक्तार्थएवग्राह्यः। एवंचेदपि पातित्यसंपादकदोषेकृतेतुपतितएवनब्राह्मणइति प्रथममेवप्रतिपादितत्वान्नास्मन्मतविरोधः। एवंफलस्यापि। तेपुण्यमासाद्यसुरेंद्रलोकमश्नंति दिव्यान् दिविदेवभोगानित्यादिस्थलेसकामविषयवस्तुत्वमेवबोध्य

मिति॥ मूलं॥ ज्ञानमपि ब्राह्मणो न भवतीत्यारभ्य न च ते ब्राह्मणाः स्युरित्यंतस्योत्तरं॥ ज्ञानतावद्ब्राह्मणो न भवति शूद्रोपि न भवति परंतु ज्ञानीत्वात्मैव मे मतमिति भगवदुक्तेः ज्ञानीत्वत्युत्तमो भवेत् व्यासादयो ज्ञान बाहुल्यादेवोत्तमा अभवन् तर्हि ये ये ज्ञानवंतः शूद्रास्ते सर्व एव ब्राह्मणाः स्युः। दृश्यंते च कचित् शूद्रा अपि वेदादि सर्व विद्या विशारदाः ते सर्वे ब्राह्मणाः स्युरिति चेत् उच्यते। अत्र सांगवेदस्याधिकारिणा विधिवदधीतस्यैव सफलत्वात्। अधिकार्युपनयन संस्कृतः। विधिस्तूपाकर्मणि वेदारंभं कृत्वा गुर्वनुज्ञयाऽध्ययनं कर्तव्यमिति। प्राप्ताधिकारस्यापि गुर्वनुज्ञां विनाऽध्ययनकरणे दोष उक्तो मनुना।

**ब्रह्मयस्त्वननुज्ञातमधीयानादवा**
**प्नुयात्॥ स ब्रह्मस्तेयसंयुक्तो नरकं**
**प्रतिपद्यत इति॥**

एवं सति विनाधिकार पठने किम दृष्टं स्यात् शूद्रस्य तु वेदश्रवणेऽपि जतुत्रपुभ्यां कर्णप्रपूरणमिति महत्प्रायश्चित्तमुक्तं पठनं दूरतो पास्तमेव। तस्मिन् वेदा अपि निर्वीर्या भवेयुः॥ यथाहुः॥

**दर्भाः पिंडेषु निर्माल्या विप्राः प्रेता**

न्नभोजने॥ वेदाःशूद्रेषुनिर्माल्यानि
र्माल्यश्चितिपावकइति॥

अतएवात्रसर्वत्रश्रुत्यर्थएवलिखितोनतुसाक्षात् श्रुतिः। कुतः। वज्रसूचींशूद्रादयएवोररीकुर्वंतीति तदवलोकनार्थमप्येतट्टंकलेखनमिति॥ अस्तुवेदा न्माभूत्शास्त्रादिनाज्ञानसिद्धिर्भवेदितिचेन्न। यथा भागवते।

शाब्दब्रह्मणिनिष्णातोननिष्णायात्
परेयदि॥श्रमस्तस्यश्रमफलोह्यधे
नुमिवरक्षतइति॥

शास्त्रपठनात्घटपटादिसामान्यज्ञानंवाग्विजयका रकंभवेत्तेनव्यवहारविषयेश्रेष्ठत्वंस्यात्परंतुभ गवद्विषयकज्ञानंविनापरमार्थविषयेश्रैष्ठ्यंनस्या त्। यथाहुः॥

त्वन्माययाकमलनाभविमोहितस्य
विद्यावतोजडमतेरपिकोविशेषः॥
गाढांधकारकवलीकृतलोचनानामु
न्मीलनेनकिमुताथनिमीलनेनेति॥

अतस्तत्ज्ञानंविलक्षणमेव। यथाह भगवान्॥

नहिज्ञानेनसदृशंपवित्रमिहविद्यते॥

ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिग
च्छतीति ॥

एवंविधस्तु ब्रह्मविद्ब्राह्मणो भवेदित्युक्ते: ब्राह्मणो
पि भवेत् परंतु तस्य स्थितिरेवं ॥

नाहं मनुष्यो न च देव यक्षौ न ब्राह्मण
क्षत्रिय वैश्य शूद्राः ॥ न ब्रह्मचारी न गृ
ही वनस्थो भिक्षुर्न चाहं निजबोधरूप
इति ॥

अतएव विधिनिषेधावपि नस्त इत्याह ॥

कार्याकार्ये किमपि सततं नैव कर्तृत्व
मास्ते जीवन्मुक्तस्थितिमुपगतो दग्ध
वस्त्रावभासः ॥ एवं देहे प्रविलयगते
तिष्ठमानो विमुक्तो निस्त्रैगुण्ये पथि
विचरतः को विधिः को निषेध इति ॥

नन्वयमेतादृश इति कथं ज्ञेयमिति चेत् । लक्षणैर्ज्ञे
यमित्याह ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगत
स्पृहः ॥ वीतरागभयक्रोधः स्थितधी
र्मुनिरुच्यत इति ॥

एतादृशास्थित्या सिद्धिलब्धशापानुग्रहसामर्थ्येन

मूलं॥ अथ वेदेनापिब्राह्मणोनभवति। इत्याद्यस्योत्त
रं॥ अत्र वेदमूलमिदं ब्राह्म्यमित्युक्तेः ब्राह्मणस्यसम
स्तकर्मसुवेदमंत्रावश्यकत्वात् वेदेनैवब्राह्मणोभवति।
रावणोब्राह्मण एव प्रत्युत आहिताग्निरपि। ब्राह्मणोने
त्युक्तिर्मोहादेवेति। यथाह्याध्यात्मरामायणे रावणंप्रति
तच्चारः शुकः।

अतस्त्वंब्राह्मणोभूत्वापौलस्त्यतनयो
पिसन्॥ अज्ञानीवसदाभोगाननुधाव
सिकिंमुधेति॥

रावणवधानंतरमपि॥

चित्यांनिवेश्यविधिवत्पितृमेधवि
धानतः॥ आहिताग्नेर्यथाकार्यंरावण
स्यविभीषणः॥ तथैवसर्वमकरोद्बंधु
भिः सहमंत्रिभिरिति॥

तर्हिरामस्यब्रह्महत्याजातेतिचेन्न॥

आततायिनमायांतमपिवेदांतपार
गं॥ जिघांसंतंजिघांसीयान्नतेनब्रह्म
हाभवेदित्युक्तेः।

रावणस्यदारहरणशस्त्रपाणित्वेनप्रबलाततायित्वा
त्। तथाऽपि। हंतव्योब्राह्मणोनहीतिश्रुत्यर्थपर्यालो

चनेन पापमधिकं मत्वा तन्निष्कृत्यर्थं सेतुबंधसंनिधौ रामेश्वरस्थापनं कृतवान् रामः। अतएव तद्दर्शनेनाकस्मिकब्रह्महत्यापापनिवृत्तिरुक्ता पराशरेण। ब्रह्मघ्ने सेतुदर्शनमिति। एवंचेत् रामो मनुष्य इति निश्चितं भवेदितिचेन्न। कुतः। उत्सीदेयुरिमेलोका न कुर्यां कर्मचेदहमिति लोकसंग्रहार्थं कृतमिति ज्ञेयं। अतः।

रामोनारायणः साक्षाद्रावणोब्राह्मणो
मतइति॥

एवं स्थितेऽपि भवता ब्राह्मणत्वं न शास्त्रेणेत्यादिना सर्वथैव निराकृतं। पुनश्च। कुंदेंदुधवलं हि ब्राह्मणत्वं नाम सर्वपापापाकरणमिति स्वरूपमुक्तं। एतेन ब्राह्मणत्वं नामैकमुत्तममस्तीति निश्चितं। अथ तस्य लक्षणविचारः कार्यः। भवताचात्र व्रततपोनियमेत्यारभ्य तं देवा ब्राह्मणं विदुरित्यंतेन लक्षणमुक्तं। क्षांत्यादिभिर्गुणैर्युक्त इत्यादि वैशंपायनवचनैरपि। एतत्सर्वमपि वचनजातं सुगुणस्तावकं न तु ब्राह्मणत्वलक्षणप्रतिपादकं व्यभिचारदर्शनात्। स्तावकंच यथाभत्युत्कर्षवर्णने भागवते॥

विप्राद्द्विषड्गुणयुतादरविंदनाभपादार
विंदविमुखात् श्वपचं वरिष्ठं मन्ये इत्या

दिना।

तृतीयस्कंधे ३३ अध्यायेऽपि॥

यन्नामधेयस्मरणानुकीर्तनाद्यत्प्रह्व
णाद्यत्स्मरणादपिक्वचित्॥ श्वादोपि
सद्यः सवनायकल्पतेकुतः पुनस्तेभ
गवन्नुदर्शनादिति॥

टीकायांश्रीधरस्वामी॥ सवनायसोमयागायकल्प
तेयोग्योभवति। अनेनपूज्यत्वंलक्ष्यतइति। एवं।

चंडालोपिहिवृत्तस्थस्तंदेवाब्राह्मणं
विदुरित्यत्र॥

अपिशब्दस्वरसात्क्षांत्यादिगुणानामुत्कर्षप्रतिपादन
एववचनाभिप्रायोनतुचंडालस्यब्राह्मणत्वप्रतिपादने।
यथा। अपिवामातरंगच्छेन्नतुगंगाप्रतिग्रहमित्यत्रा
पिशब्दस्वरसादेवगंगाप्रतिग्रहस्यात्यंतगर्हणंदर्शि
तंनतुविधिलिंङः प्रयोगेऽपिमातृगमनविधिर्दर्शितः
अनर्थापत्तेः। एवमत्रापीतिध्येयं। अथवा। चंडस्त्वत्यं
तकोपनइतिकोशोक्तेः अलंपर्यायंचंडः चंडालइति
व्युत्पत्यादीर्घात्यंतकोपनोपीति। अतएवभृगुदुर्वासोज
मदग्न्यादयोपिब्राह्मणाइति। अन्यच्च। देवमानुषनारी
णामित्यादिना सुतरांमैथुनत्यागस्यैवब्रह्मलक्षणत्वंमुक्तं।

एतस्यैव यस्तुत्वे ब्राह्मणस्य विवाहविधिरेव न स्यात्। तथा सति यज्ञादीनां निवृत्तिः। तथा च ऋणत्रयानिवृत्तिः ब्राह्मणाभावश्चेत्यनेकानर्थापत्तिः स्यात् अतो मैथुनत्यागो धर्मपत्नीतरस्त्रीविषय एव। धर्मपत्नीगमनं तु विधिप्राप्तं धर्म्यं। अत एव भगवान्॥

**धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभेति॥**

तस्मात्सुतरां मैथुनत्यागोक्तिर्निरर्थकैवेति॥ किंच॥ तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिरेति वचनं तु। यथा। सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने। इत्यत्र सर्ववर्णेष्वित्यनेनैव पृथक् निर्देशात्। शुचा द्रवंतीति शूद्रा इति व्याख्यानौचित्यं तथैवेदमपि व्याख्येयं। अन्यथा स प्रोक्तो ब्राह्मणो बुधा ई त्यादि वचनानामानर्थक्यं स्यात्। अपि च। शूद्रोपि शील संपन्न इत्यादि पंचेंद्रियार्णवं घोरमित्यादि श्लोकद्वयमपि स्तावकमेव। कुतः॥

**दुःशीलोपि द्विजः पूज्यो न तु शूद्रो जितेंद्रियः॥ कः परित्यज्य गां दुष्टां दुह्याच्छीलवतीं खरीमिति न्यायोपबृंहितवचनविरोधात्॥**

एवमेव सदाचारदर्शनाच्चेति॥ अथ पूर्वं व्यभिचार

दर्शनादित्युक्तं कथं तदित्यपेक्षायामाह॥ पूर्वोक्तगुणप्रशंसावचनजातस्य ब्राह्मणत्वलक्षणत्वे यत्रैते गुणाः संति तत्रैव ब्राह्मणत्वं यत्र न संति तत्र ब्राह्मणत्वं नास्तीति वक्तव्यं। एवं चेत् इंद्रियनिग्रहाद्युक्त सर्वगुणा विदुरे आसन् परंतु स ब्राह्मणो न जातः शूद्र एवासीत्। तत्रैव श्रेष्ठत्वमात्रं। एवमपि न नियतत्वं त एव गुणा भीष्मेऽप्यासन् स तु क्षत्रिय एव। एतादृशगुणवानेव श्रावणो यो मृगयायां राज्ञा वजानता राज्ञा दशरथेन हतः स तु वैश्य एव। तस्य वैश्यत्वं कथं ज्ञातमिति चेत् तस्यैव वचनेन। तथा चाध्यात्मरामायणे दशरथः॥

> ततो मामाह स मुनिर्माभैषीर्नृपसत्तम॥ ब्रह्महत्या स्पृशेन्न त्वां वैश्योऽहं तपसि स्थित इति॥

अनेन। तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणमित्युक्तिर्व्यभिचरिता॥ अथ। एतद्विपरीतगुणा रावणे आसन्। यथाह रावणवधानंतरं रामं प्रति विभीषणः॥

> नृशंसमनृतं क्रूरं त्यक्तधर्मव्रतं प्रभो॥ नाहोस्मि देव संस्कर्तुं परदाराभिमर्शिनमिति॥

स तु ब्राह्मण एवेति प्रागेव प्रतिपादितं न तु चंडालः॥

अत्रराक्षसत्वमभ्यागतंपरंतुवाल्मीकिरपिपूर्वमेतादृश एवासीत् यथाहरामंप्रतिवाल्मीकिः॥

अहंपुराकिरातेषुकिरातैःसहवर्धितः॥जन्ममात्रद्विजत्वंमेशूद्राचाररतःसदा॥शूद्रायांबहवःपुत्राउत्पन्नामेऽजितात्मनः॥ततश्चौरैश्चसंगम्यचौरोऽहमभवंपुरा॥धनुर्बाणधरोनित्यंजीवानामंतकोपमइति॥

एवंविधोपिसप्तर्षिप्रसादादृषिर्जातः। एतेनब्राह्मणःकेनचिदंतरायेण कदाचित्कर्महीनश्चेदपितस्य ब्राह्मणत्वंननश्यतिकिंतुमलिनंभवतिपुनश्चतपसा पुटपाकशोधितसुवर्णवत्तेजस्वीभवेदितिज्ञापितं॥ एवंविदुरादिषुतद्गुणसत्वेऽपिब्राह्मणत्वाभावः रावणादिषुगुणाभावेऽपिब्राह्मणत्वसत्वमिति अन्वयव्यतिरेकाभ्यांव्यभिचारः स्पष्टएवअतोनैतल्लक्षणमुचितमिति॥ तर्हिब्राह्मणस्यकिंवालक्षणमित्युक्ते यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाख्यषट्कर्माधिकारित्वमेवब्राह्मणस्यलक्षणमिति॥ अधिकारित्वमात्रकथनेनानाहिताग्न्यादौनाव्याप्तिः। तेनविनाकरणासरभूसंज्ञादौनातिव्याप्तिः। परधर्मत्वेनफलव्य

भिचाराच्च। अनुत्पन्नाधिकारिणि मृतेउत्पन्नविनष्ट घटलक्षणमत्राप्यनुसंधेयं। अनेन यत्राधिकारित्वं तत्र ब्राह्मणत्वंयत्राधिकारित्वंनास्ति तत्र ब्राह्मणत्वम पिनास्तीति लक्षणसमन्वयोजायते॥ ननु। अनाहिता ग्न्यादौ कर्मकरणे ऽप्यधिकारित्वं परभूसंज्ञादौ कर्म करणे ऽप्यनधिकारित्वं कथं ज्ञेयमितिचेत्लोकप्रसि ध्यैव। तर्हि लोकप्रसिद्धिः अद्दल्कादरनामकेयवने गाणः पत्योब्राह्मण इत्यासीत् नत्रातिव्याप्तिरितिचेदु च्यते। कूटकार्षापणादिव्यवहारस्य तद्यास्तवाज्ञानका ले एकदेशसत्यत्वाभासेन प्रतीयमानत्वे ऽपि तज्ज्ञेन ज्ञा ते सदंडं पुनर्यथायोग्यव्यवहारे स्थापनं क्रियत एव। एवमत्रापि परिणामे शिक्षादिदर्शनं जातमेवातः सार्व जनीनप्रसिध्या ऽधिकारित्वज्ञानेन दोषावकाशइति॥ यजनादीनां विवरणं स्ट्हट्टं के द्रष्टव्यं॥ यजनाद्युक्तसम ग्रस्यैकेनकेनापि कर्तुमशक्यत्वादेवाधिकारित्वमात्रक थनं॥ ननु।

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरु षं॥ स वै दुर्ब्राह्मणो नाम सर्वकर्मवहि ष्कृत इति।

कर्माकरणे दौर्ब्राह्मण्यमुक्तं कथमधिकारित्वमात्रेण

सिद्धिरितिचेन्नैवं। एतद्वचनस्यनिंदाश्रवणेनतत्कर्म प्रवर्त्तकाभिप्रायत्वात्। अन्यथाबहुधाब्राह्मणाभावएव स्यात्। भवतुकिमर्थंपोषणंक्रियतइतिचेत्श्रुतिविरो धश्च। तथाचश्रुत्यर्थः॥

ब्राह्मणस्यैषमहिमानित्योनोक्षीयते
क्वचित्। वर्धतेकर्मणानैवतस्माद्ब्रा
ह्मणउत्तमइति॥

एवमपिसर्वमेवनत्याज्यं। यजनेअकरणान्मंदकर णं। अध्ययेनेयावदध्ययनंयत्किंचिद्वा। दानंचविभवा नुसारतः। अन्यथानिंदाप्राप्तिः नतुब्राह्मणत्वहानिःप रंतुकर्मकरणमंदकरणाकरणेरुत्तममध्यमाधमत्वं स्यात्। अतएवब्राह्मणेष्वप्यनेकभेदाजाताः। अत्रस र्वानपिकथयितुमशक्यत्वात्कांश्चिद्दर्शयामः॥ मुख्य स्तुवेदचतुष्टयतः शाखाचतुष्टयात्मकः समानएव। अस्मिन्नेवदेशादिनामतः न्यूनाधिक्यभेदाजाताः। यथा॥

आंध्राःकर्णाटकाश्चैवगुर्जराद्रविडा
स्तथा॥ महाराष्ट्राइतिख्याताःपंचैते
द्रविडाःस्मृताः॥ सारस्वताःकानकु
ब्जागौडाउत्कलमैथिलाः॥ गौडाइ

तिसमाख्याताः पंचैते मुनिसत्तमैरिति॥

ननु कानकुब्जा उत्कला मांस मत्स्य भक्षणं कुर्वंति तत्तु आकाशगामिनो विप्राः पतंते मांस भक्षणादिति निषिद्धं। अतएते कथं ब्राह्मणा इति चेत्। उच्यते। एवं सामान्यतो निषिद्धेऽपियुगांतरे विशेष विधिरासीत्। यथा॥

शशश्च शल्लकी गोधा कूर्मः खड्गश्च पंच
मः॥ पंचपंचनखा भक्ष्या मांसभक्षी न दो
षभाक्॥

इत्यादिना मांसभक्षणे। जाति भेदेन मत्स्य भक्षणेऽपि॥ तथा पाठीनराजीवशल्यकाश्च द्विजातिभिः॥ सिंहास्य रोहिता वाद्यौ नियुक्तौ हव्य कव्ययो रिति॥ एतत्कलौ निषिद्धं तैर्नादृतं॥ एच मांध्राद्या मातुल कन्या परिणयं कुर्वंति तदप्यनुचितमेव भाति। कुतः यथा पितृव्य कन्या भगिनी तथा मातुल कन्याऽपि स्वसारं मातरं विनेति सापिंड्य निर्णये निषिद्धं अत्र कथमिति चेदुच्यते। एतन्निर्णयो गाणेशे भारत तात्पर्ये॥

भ्रातृष्वस्रोः सुतौ भ्रातृष्वसारौ यदि शौ
नक॥ सप्तमादूर्ध्वमप्येष संबंधश्चि
यतां कथं॥ तस्मात्तयोः स्वस्त्भ्रातृभा
वो भाक्तो वि गोत्रयोः॥ दांपत्यभावस्तु

तयोर्मंत्रलिंगात्परिस्फुटः॥ योषापत्यं
मातुलीयं यथा भागः पितृष्वसुः पुत्रस्यै
वं वपातेऽमुंज्जुषस्वेंद्रेत्यृषिर्जगो इति॥

अतो मातुलकन्यायां भगिनीत्वकथनं मोहादेवेति प्रतिभाति दांपत्य भावस्तु श्रुतिसिद्ध इति। एवं स्थितेऽपि वाजसनेय्यादिशाखांतरेषु निषेधपर्यवसानं दृश्यते तेषामृषिसंमतं तथैवेत्यत उक्तं तथा मुनीनां मतयश्च भिन्ना इति। किंच। महाराष्ट्रा यादासीगमनं कुर्वंति तच्च। शूद्रीपरिवृतो विप्रः शूद्री च गृहमेधिनीत्यादिना निंदितमेतत्कथमिति चेत्। युगांतरे वर्णचतुष्टयदारग्रहणं ब्राह्मणस्यासीत् कलौ निषिद्धं तैर्नादृतं। एवं चर्मद्रोणिस्थोदकपानमपीत्येतत्सर्वं देशाचारेण व्यवस्थितं॥ यथाहुः॥

उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता
द्विजैः॥ दासीसंगो मध्यदेशे उदकमास
स्यभक्षणं॥ मत्स्यादाश्च नराः पूर्वे व्य
भिचाररताः स्त्रियः॥ पश्चिमे वाडवा
श्चर्मद्रोणिस्थजलपायिनः॥ अनेनक
र्मणा नैते प्रायश्चित्तदमार्हका इति॥

अतो निंदाऽपि न कार्येत्याह पराशरः॥

युगेयुगेच्चयेधर्मास्तत्रतत्रच्चयेद्विजाः॥
तेषांनिंदानकर्तव्यायुगरूपाहितेद्विजा
इति॥

मूलं॥ अन्यच्चभवतोक्तं इह शूद्राणांप्रव्रज्यानविधीय
त इत्यारभ्यब्राह्मणशुश्रूषैवतेषां धर्मोनभवतीत्यंत
स्योत्तरं॥ शूद्राणांनीचत्वं तुपभ्द्यांसुत्पन्नत्वेनश्रुत्यैवा
भिहितं। एतदेवमुख्य हेतुः एनंपुरस्कृत्यानुवादकत्वे
नचतुर्षुवर्णेष्वंतेवचनादित्यादिरपि संगच्छते। अत्रे
दं तत्वं। यत्रपाठक्रमवदेवार्थक्रम स्तत्रमुख्यत्वमेव।
यत्रपाठक्रमेबाधस्तत्रार्थक्रमे बाधः। श्वयुयमघोना
मित्यत्र पाठक्रमेगृहीते इंद्रस्यनीचत्वंस्यात् तथा सति
योग्यताविरहः तेनच्चवाक्याप्रामाण्य प्रसंगइतितत्रा
र्थक्रमएव ग्राह्यः। ब्रह्मक्षत्रविट्शूद्रा इत्यत्र मुख्यत्व
मेवेति॥ तर्हिगंगाऽपिभगवत्पदोत्पन्नत्वा देवभगव
त्पदीत्युच्यते अतः साऽपिनीचा स्यादितिचेन्न। एकां
गोत्पन्नत्वेऽपिसंतत्युच्चरयोरिव गंगाशूद्रयोरप्युपादे
यहेयत्वेन मुख्यनीचत्वस्य प्रसिध्धत्वात्॥ अपिच।
स्त्रीशूद्रद्विजबंधूनांत्रयीनश्रुतिगोचरेतिभागवत्तप्रथ
मस्कंधे सूतोक्तेः वेदानधिकारादेवप्रव्रज्याऽनधिकार
इति। भयत्प्रतिज्ञातुवेदाः प्रमाणंस्मृतयः प्रमाणमि

त्यादिना। एवमपिस्थिते शुश्रूषाविषये परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजमितिभगवद्वचनेऽजाग्रत्यपि कथंनेतिब्रूते। विनावचनप्रमाणमेव प्रव्रज्या कथंविधीयते। अतएवमसदाग्रहेणभवान् शूद्रपरिव्राजक इतितर्क्यते॥ मूलं। किंचाप्यन्यभ्दवदीयमतंमुखतो ब्राह्मणोजात इत्यारभ्य तेषामपि ब्राह्मण संज्ञाक्रियत इत्यंतस्योत्तरं॥ आबध्यकृमिमसटाजटिलांसभितिरारोपितोमृगपतेः पदवींयदिश्वा॥ मत्तेभकुंभतटपाटनलंपटस्य नादंकरिष्यति कथंहरिणाधिपस्य॥ एवमेवसंस्कारैः शूद्राणांब्राह्मणत्वमिति॥

मूलं। एकवर्णोनास्तिचातुर्वर्ण्यमित्यारभ्यैवंब्राह्मणादीनांकथंचातुर्वर्ण्यमित्यंतस्योत्तरं॥ यद्येकस्माज्जाताः सर्वेसमानाएवेतिचेभ्दवन्मतंतर्हिपशुपक्षिमृगादीनामपिभगवत एवोत्पन्नत्वात् हंसाः काकाः कृष्णसाराः श्वानः अश्वा गर्दभा इत्यादिषूत्तमाधमत्वं नस्यात् तेनभवतः अश्ववाहनवद्गर्दभयानमपीष्टं स्यात् नतु लोकेऽत्यंतंनिंद्यं। यथा॥

बालगखित्वमकारणहास्यंस्त्रीषुविवादमसज्जनसेवा॥ गर्दभयानमसंस्कृतवाणीषट्सुनरोलघुतामुपया

तीति॥

अहो किमेवमुच्यते॥ मूलं। इहहि गोहस्त्यश्वेत्यारभ्यै कएवंवर्णोभवतीत्यंतस्योत्तरं॥ अत्र राजतद्वाहनयो र्मनुष्यत्वाश्वत्ववभेदाभावेऽपि राजतद्भृत्ययोः सेव्य सेवकभावेन मुख्यनीचत्वभेदो यथा लोकप्रसिद्धः त थाऽत्रापि अभिवादनाशीर्वादकर्तृत्वेनभेदव्यवहारद र्शनात्। ननु। अभिवादनशास्त्रे।

ऊर्ध्वंप्राणाह्युत्क्रामंतियूनः स्थविरआ
गते॥ प्रत्युत्थानाभिवादाभ्यांपुनस्ता
न्प्रतिपद्यतइति॥

वयोविशेषस्यैवोक्तत्वात्कथंब्राह्मणएवाभिवाद्यइ त्युच्यतइतिचेत्। ज्येष्ठत्वंचब्राह्मणएवोक्तं। यथा मनुः॥

ब्राह्मणंदशवर्षंतुशतवर्षंतुभूमिपं॥
पितापुत्रौविजानीयाद्ब्राह्मणस्तुत
योःपितेति॥

अतएवभोजराजः॥

उच्चैर्गतिर्जगतिसिध्यतिधर्मतश्चे
त्तस्यप्रमाच्ववचनैः कृतकेतरैश्चेत्॥
तेषांप्रकाशनदशाऽपिमहीसुरैश्चे

त्वानंतरेण निपतेत्स्कनुमत्प्रणाम इ

ति॥

अत एव महाजनो येन गतः स पंथा इत्युक्तं॥ मूलं।

इदं चाव गम्यतां यथैकवृक्षोत्पन्नानामित्यारभ्यैक

पुरुषोत्पन्नत्वादित्यंतस्योत्तरं॥ अत्र यथा वृक्षस्य

बुध्नाच्छिखर पर्यंत समानत्वं तथा पुरुषावयवाना

मपि नोत्तमाधमत्वमतो मुखात्पादपर्यंतमुत्पन्नानां

समानत्वमिति। अवयवसाम्यं प्रतिपादितं। एवं चे

त्यथा शिरसि करधारणेन प्रसादबोधात्संतोषो भव

ति तथा पादधारणेनापि भवेत्। एवं कश्चित् कस्यापि

न भवति। अन्येषां भेदबुद्धीनां न भवतु भवान् सम बु

द्धिः भवतो भवेत्। अतः पादत्राणं शिरसि धृत्वा शिर

स्त्राणं पादे कृत्वा सभायां सन्मानं लभते चेत् भवदुक्ति

र्भवत्कृते सत्येत्यंगीकुर्मः। एवं कर्त्तुं भवानपि न शक्नो

ति तदा मनस्यन्यद्वचस्यन्यत्कार्यमन्यद्दुरात्मनामि

ति दोष आपतत्। अतः स्वोक्तिनिर्वाहार्थं निरपत्रपः

सन् यद्यपि करोति भवान् तथाऽपि सभासदो न सभ्यं

मन्येरन् प्रत्युत छकारेकारथकारोकार संयोगोच्चा

रणेन न्यक्कुर्वीरन्। अतो वैदिक लौकिक विरुद्धं क

थं जल्पति। तथा च मनुः॥

उर्ध्वंनाभेर्मेध्यतरः पुरुषः परिकी
र्तितः॥ तस्मान्मेध्यतमंत्वस्य मुख
मुक्तंस्वयंभुवेति॥

तस्माद्ब्राह्मणस्यश्रैष्ठ्यमव्याहतमेवेति॥ मूलं। अन्य
च्चदूषणंभवति यदि मुखतोजातो ब्राह्मणो ब्राह्मण्याः
कुतउत्पत्तिरित्यारभ्यानियतंब्राह्मण्यमित्यंतस्योत
रं॥ अनयोत्तयास्वयोग्यतांप्रकटीकृतवान्यथाहमा
घः॥

सहजांधदृशः स्वदुर्नयेपरदोषेक्षण
दिव्यचक्षुषः॥ स्वगुणोच्चगिरोमुनि
व्रताः परवर्णग्रहणेष्वसाधवइति॥

अहोअत्रमहुर्नयः कोवेतिचेत्शृणु। शूद्राकुतउत्पन्ना।
भवन्मतेपृथगवयवांगीकाराभावेऽपिएकस्मादुत्प
न्नत्वादेवैकैवजातिरितिभवत्संमतमेव। अतः शूद्रा
या अपितस्मादेवोत्पन्नत्वात्भवादृशानामपिदुर्नि
वार्यएवभगिनीप्रसंगः। अथयदि मन्यसे अनभिहि
तप्रव्रज्याग्रहणात्गुणसंगेनतद्दोषान्मुक्तइति। हं
ततर्हिभवत्पितातेनदोषेणविनाभवंतंकथमुत्पादि
तवान्। अतस्त्वत्पिताभगिनीगामीत्वंशुधः किं। नहि
लोकेयत्रकुत्रापिपतितपुत्रः शुचिर्दृष्टः। एतत्सर्व

मविचार्य्यैवदोषोद्भाटनंहास्यास्पदमेव। यथाहुः॥

यदन्नोषविलक्षणार्थवादैरविवादा
र्थममुंविकल्प्यतर्कैः॥ परिदूषयितुं
प्रवृत्तमात्रः परिहासास्पदतामुपैति
लोके। इति॥

मूलं॥ सर्वेवैयोनिजामर्त्याइत्याद्यस्योत्तरं॥ एतद्व
चनमसंबद्धमेवलक्ष्यते। अगस्त्योगस्तिपुष्पाच्चे
त्यादिनास्वपूर्वोदाहृतवचनविरोधात्। द्रोणाचार्य्या
दीनांअयोनिजत्वंपुराणादिषुसर्वत्रप्रसिद्धमतएतद्व
चनंहेयमेवेति॥ मूलं॥ एकवर्णमिदंपूर्वविश्वमासी
द्युधिष्ठिरेत्यादिवैशंपायनवचनस्योत्तरं॥ एतद्वचन
स्यापिपूर्ववचनसाहचर्यमेवप्रतिभाति। श्रुतिविरो
धात्। तथाचश्रुत्यर्थः॥

धातायथापूर्वमेवाकल्पयज्जगदादि
तः॥ अनीदृशंजगत्क्वापिनकदाचि
द्भवेदिदमिति॥

स्मृतिश्चमनुः॥

सर्वेषांतुसनामानिकर्माणिचपृथक्
पृथक्वेदशब्देभ्यएवादौपृथक्संस्था
श्चनिर्ममइति॥

शारीरकसूत्रंच॥

शब्द इतिचेन्नातःप्रभवात्प्रत्यक्षानु
मानाभ्यामिति॥

एवंसर्वत्रवेदशब्दतएवजगदुत्पत्तिरुक्ता। वेदेऽपिमु
खतोब्राह्मणोजातइत्याद्यर्थोदर्शितः। भगवताऽपि।
चातुर्वर्ण्यंमयासृष्टंगुणकर्मविभागशइत्युक्तमतः
सृष्ट्यादितएववर्णव्यवस्थेतिसिद्धं॥ अन्यथावेदा
नामप्यादिमत्वप्रसंगः तेनतेषामपिपौरुषेयत्वेनप्र
माणानर्हत्वं। तथासतितदनुगतस्मृत्यादीनामप्यप्रामा
ण्यमेव। ततोवेदाःप्रमाणंस्मृतयःप्रमाणमित्यादिनो
क्तभवत्प्रतिज्ञाभंगश्चेत्यनेकानर्थापत्तिःस्यात्॥ अत
एतद्वचनमपिहेयमेवेति नैष्कर्षः॥ ननुयदिभगवता
प्रथमतएवचातुर्वर्ण्यंविहितंतर्हिसर्वत्रकिमितिनकृ
तं। वर्णव्यवस्थितिरिहैवकुमारिकाख्येइति। इहभार
तवर्षएवकौमारिकाखंडेवर्णव्यवस्थितिःकिमर्थं
कृतेतिचेत् उच्यते। अस्यैवकर्मभूमित्वात् गुणकर्म
विभागशएववर्णविधानात्। भरतवर्षंच। तुषारा
द्रेर्लंकावधिभरतवर्षंनिगदितमिति। हिमालयतः
लंकावधि। अत्रैवाहोरात्रस्यात्यंतवृद्धिक्षयाभावा
त्। अतिशीताभावाच्चप्रातःशीतोदकस्नानसंध्याहो

मादिकर्मयोग्यत्वात्कर्मभूमित्वं। परंतस्तुशीताधिक्येनोदकंघनीभूतंजायते तत्रशौचविधिरेयकर्त्तुमशक्यः स्नानादिकंतुदूरतएव। यथोक्तं॥

यदत्रजागर्तिशिलासमंहिमंसुशी
तलागंधवहाश्चदुःसहाः॥जलावगा
हाच्चकितोनरोयतःकुतस्त्वनुष्ठास्य
तिकर्मनिर्मलमिति॥

अन्यच्चज्योतिः सिद्धांतशिरोमणौ॥

लंबाधिकाक्रांतिरुदकचयावत्तावद्दि
नंसंततमेवतत्रइत्येव

इत्येवंअक्षांशलंबांशक्रांतिवशाद्यत्रयत्रात्रत्यपक्षमासद्विमासकालावध्येकमेवदिनंभवेतत्रस्नानसंध्यादिकर्मणोतिकालविलंबेनानुपपत्तिः। सायंप्रातर्द्विजातीनामशनंश्रुतिचोदितमितिदिवाभोजनद्वयनिषेधात् तावतिदिवसेभोजनद्व्याभावेसतिप्राणधारणमेवनस्यादितिपरमकारुणिकेनभगवतालोकसौख्यार्थमेवेवंकृतमितिज्ञेयं॥ इतरवर्षेषुच। शेषेषुचांत्यजजनानिवसंतिसर्वेइति एकैवजातिर्विहिता। तत्रत्यानांकर्मकरणाशक्यत्वेऽपितदितरसदाचरणेनैवकृतार्थतासिध्यर्थंभगवतातेष्वे

वावतारं धृत्वा तन्द्राषयैवसेश्वरं शास्त्रं विहितं। यथाऽस्मच्छास्त्रेऽपि॥

परापवादे येमूकाः परस्त्रीषुनपुंसकाः
परद्रव्येषुयेचांधास्तेषांगंगापदेपदे
इति॥

तस्माद्वर्णव्यवस्थितिरादितएवास्ति॥ अस्तुवापूर्वं कथमपितथैवाधुनाप्याचारः सर्वत्रनसंभवति। यदुच्यतेऽस्माभिस्तथैवाचरिष्यतइति। अत्रभवताऽपिम्लेच्छादिकैः सहभोजनंकर्त्तुनशक्यते। तुरुष्काहूणाश्चसर्वैः सहभोक्तुंशक्नुवंतिपरंतुतेऽपिविवाहेसोदरभगिनींकिमितित्यजंति। सृष्ट्यादौतुएकस्यैवशरीरात्स्त्रीपुरुषावुत्पन्नौतन्मिथुनात्सर्वेजाताः। यथामनुसंहितायां॥

द्विधाकृत्वात्मनोदेहधर्मेनपुरुषोऽभ
वत्॥अर्धेननारीतस्यांसविराजमसृ
जत्प्रभुरिति॥

अतएवनदेवच्चरितंचरेदित्युक्तंचरितंतुशास्त्रोक्तंचरेत्। यथाहभगवान्।

तस्माच्छास्त्रंप्रमाणंतेकार्याकार्यव्य
वस्थिताविति॥

---

शास्तीति शास्त्रं विधिरूपं वेदः स एव प्रमाणं ॥ ब्राह्मणविषये श्रुत्यर्थः ॥

यावंत्यो देवता लोके ताः सर्वा ब्राह्मणे
स्थिताः ॥ तस्माद्ब्राह्मणवर्येभ्यो वेदवि
द्भ्यस्तु दर्शने ॥ दर्शनेन मनं कुर्यान्नाप्री
तिं कीर्तयेत्कदा ॥ एवं कृते देवता एताः
प्रीणात्येव न संशय इति ॥

स्मृतिश्च मनुः ॥

उत्तमांगोद्भवाज्ज्येष्ठ्याद्ब्रह्मणश्चैव धा
रणात् ॥ सर्वस्यैवास्य सर्गस्य धर्मतो
ब्राह्मणः प्रभुरित्यादि ॥

अत एव तद्भरणमपि राज्ञा कर्त्तव्यमित्याह ॥

ब्राह्मणान्भर राजेंद्र पुनश्च ब्राह्मणा
न्भर ॥ तस्मात्सर्वप्रयत्नेन पुनश्च ब्रा
ह्मणान्भरेति ·

वीप्सयोक्तं ॥ अन्यथा द्वेषे अनिष्टफलमपि दर्शितं ।
यथा ॥

गतश्रीर्गणकं द्वेष्टि गतायुश्च चिकित्स
कं ॥ गतश्रीश्च गतायुश्च ब्राह्मणान्द्वे
ष्टि भारतेति ॥

शास्तीति शास्त्रं विधिरूपं वेदः स एव प्रमाणं ॥ ब्राह्मणविषये श्रुत्यर्थः ॥

यावंत्यो देवता लोके ताः सर्वा ब्राह्मणे
स्थिताः ॥ तस्माद्ब्राह्मणवर्येभ्यो वेदवि
द्भ्यस्तु दर्शने ॥ दर्शनेन मनं कुर्यान्ना प्री
तिं कीर्तयेत्कदा ॥ एवं कृत्वे देवता एताः
प्रीणात्येव न संशय इति ॥

स्मृतिश्च मनुः ॥

उत्तमांगोद्भवाज्ज्येष्ठ्याद्ब्रह्मणश्चैव धा
रणात् ॥ सर्वस्यैवास्य सर्गस्य धर्मतो
ब्राह्मणः प्रभुरित्यादि ॥

अतएव तद्भरणमपि राज्ञा कर्त्तव्यमित्याह ॥

ब्राह्मणान्भर राजेंद्र पुनश्च ब्राह्मणा
न्भर ॥ तस्मात्सर्वप्रयत्नेन पुनश्च ब्रा
ह्मणान्भरेति ·

वीप्सयोक्तं ॥ अन्यथा द्वेषे अनिष्टफलमपि दर्शितं ।
यथा ॥

गतश्रीर्गणकं द्वेष्टि गतायुश्च चिकित्स
कं ॥ गतश्रीश्च गतायुश्च ब्राह्मणान्द्वे
ष्टि भारतेति ॥

एवंस्थितेऽप्यस्योध्यस्येनोपसंहरत्यश्वघोषः॥

अस्माभिरुक्तंयदिदंद्विजानांमोहंनि
हंतुहतबुधिकानां॥गृण्हंतुसंतोय
दियुक्तमेतन्मुंचंत्वथाऽयुक्तमिदंय
दिस्यादिति॥

अत्राश्वघोषाभिप्रायस्तूक्तानएवपरंतुब्राह्मणाक्षेप
मसहमानासरस्वतीवास्तवार्थमेवंवदति।हतबुधि
कानांप्राप्तबुधीनामपीतिकर्मणिषष्ठीमोहंनिहंतु
प्रापयितुमितिणिच्ः अध्याहारः अस्माभिरुक्तमि
ति॥हनहिंसागत्योः।अथवाप्राप्तबुधीनांनिर्धारणेयो
स्माकंमोहोजातःतंनिहंतुदूरीकर्त्तुमुक्तमिति।अयंभा
वः।एतदाक्षेपोक्तेःकेनाप्युत्तरंदीयतेचेत्तद्दृष्ट्वाऽस्म
न्मोहभ्रांतिर्भवेदिति॥एवंसदसदर्थद्वयप्रतिपादक
श्लोककथनात्अश्वघोषशब्दनिर्वचनेपरिसंख्यावि
धिःस्वीकरणोचितइत्यलंपल्लवितेन॥ एवंभूयात्॥
सकलकुशलसिध्यैसर्वदेवस्थलेषुव्रजतुभुविसमृ
धिंवत्सराद्युत्सवश्रीः॥अपगतभवरोगैरध्वराणां
प्रयोगैरखिलशुभकराणामस्तुभद्रंद्विजानामिति॥न
नुवज्रघोषेणस्ववज्रसूचीग्रंथान्तेलिखितं॥यथा॥

यदानकुरुतेपापंसर्वभूतेषुदारुणं॥

कायेनमनसावाचाब्रह्मसंपद्यनेतदेति॥

एवंभूतमार्गेत्रिविधकरणैः पापाकरणेब्रह्मप्राप्तिरिति ज्ञात्वालिखिताऽपिब्राह्मणेषुवाचाग्रंथेन। मनसाध्यायति हियत्तद्वाचावदति ध्रुवमिति वेदार्थोक्तेः मनसाचनिंदारूपपापमाचरितवान् संभावितस्यचाकीर्तिर्मरणादति रिच्यत इत्येतद्दारुणपापमेवैतदाश्चर्यमितिचेन्न। यथाभागवते ४ स्कंधे ४ अध्याये॥

नाश्चर्यमेतद्यदसत्सुसर्वदामहद्विनिंदाकुणपात्मवादिषु॥ सेर्ष्यंमहापूरुषपादपांसुभिर्निरस्ततेजस्सुतदेवशोभनमिति॥१३॥

निंदाकरणकारणंचैवं॥भागवते ४ स्कंधे ३ अध्याये॥

पापच्यमानेनहृदातुरेंद्रियः समृधिभिः पूरुषबुधिसाक्षिणां॥ अकल्पएषामधिरोढुमंजसापदंपरंद्वेष्टियथाऽसुराहरिमिति॥ २१॥

अहोभवंतोप्यतिप्राज्ञमध्वघोषमाक्षिप्तवंतः अत एतत्सर्वंभवत्सुकिंनस्यादितिचेत्।उच्यते। शठे प्रतिशठं कुर्यादादरे पुनरादरमिति न्यायात्यथातस्याक्षेपोक्तिस्तथाप्रत्युक्तिरपिलिखितेति॥तथाऽपिशठे प्रतिशठं

कुर्यादित्यर्थः। इत्थं सामान्यजनविषयकं सच्चेष्टितं त्वेवं॥ गर्वितो इह तेन निंदति परान्नो भाषते निष्ठुरं उक्तं केनचिदप्रियेण सह ते क्रोधं च नालंबते॥ श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवत् दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां चेष्टितमिति॥ सत्यं परंतु संतोपि स्वस्मै कोप्यपराध्यति चेत् सहं तेन तु लोकापराधं। यथाह भगवान् माघे॥

नदूये सात्वतीसूनुर्यन्मह्यमपराध्यति॥ यत्तु दंदह्यते लोकमदो दुःखाकरोति मामिति॥

एवं सामान्यलोकापराधविषये ब्राह्मणविषये तु भगवान्॥ घ्नंतं शपंतं परुषं वदंतं यो ब्राह्मणं न प्रणमेद्यथाऽहं॥ स पापकृद्ब्रह्मदवाग्निदग्धो दंड्यश्च वध्यश्च न चास्मदीय इति॥ एवं सापराधब्राह्मण सांत्वन एव शासनमुक्तं। अथ घोषस्तु निरपराधिब्रह्मकुलमेव द्वेष्टि असौ कथं न दंड्यः अपितु दंड्य एव। तत्रापि विप्रपीडाकरं छेद्यमंगमब्राह्मणस्य त्विति याज्ञवल्क्यस्मरणात्। अनेन वचसा पीडा कृताऽतोस्य जिह्वाछेद्यत्यागतं तथाऽपि क्षमया केवलमाक्षेपमात्रं कृतमतोस्मासु न दोषावकाश इति॥ यथा॥

बाल्यश्रुतीनामसदाग्रहाणामपक्वबा
न्धामतिमानिनांच ॥ मात्सर्यमुत्सारयि
तुंमयोक्तं गृण्हंतुचेद्युक्तमिदंतुसंतः॥

सद्व्यवहारप्रवृत्त्यर्थमेवेदं सर्वलेखनं परंत्वत्तश्चिंत
नीयमेवं ॥ सर्वेऽपिसुखिनःसंतुसंतुसर्वेनिरामयाः॥
सर्वेभद्राणिपश्यंतुमाकश्चिद्दुःखमाप्नुयादिति ॥ अतः
सर्वसौख्यार्थंभगवदाशिषमाशास्महे ॥ शुभदाशीःप्रदौ
रम्याबालांबुकविराजितौ ॥ जितकामौहरिहरौबाण
दोश्छिन्नकद्रिपू ॥ पूर्णानंदैकचिद्रूपौवशावर्लिजगन्मयौ॥
दद्यातांशर्मयोनश्च्यतिरोहितपृथग्भ्रमौ॥देशोमालव
नामकेऽत्रनगरीभूपालनाम्नीशुभातस्याअंतिशिहूर
नामकपुरीयस्यामजंगाग्रणीः विल्किन्सन्मितिसाहि
बोविजयतेतस्याश्रितानांसभामध्येऽभूल्लघुटंकएष
विदुषांतोषायदोषापहः ॥ नंदबाणगिरिचंद्रसंमितेशा
लियाहनशाकेऽयनेऽवरे॥ अश्वयुग्धवळपंचमीबुधे
टंकएषखलुनिर्मितोलघुः॥ इतिश्रीहरिहरद्रूपसुश्लो
कन्वरणादिघटितसुवर्णादिनाम्नासमस्तब्राह्मणवि
द्वन्मंडलीशिष्येणविरचितोवज्रसूचीलघुटंकः समा
प्तः॥ श्रीरस्तु॥ शुभंभवतु॥ ॥छ॥ ॥छ॥ ॥छ॥

